# द्विकर्मकस्थले प्रयोगपरिवर्तनम्

गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्याम्॥

# द्विकर्मकस्थले प्रयोगपरिवर्तनम्

गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्

| | |
|---|---|
| १) पथिकः छात्रं मार्गं पृच्छति | पथिकेन छात्रः मार्गं पृच्छ्यते |
| २) बालकः वृक्षम् आम्रम् अवचिनोति | बालकेन वृक्षाः आम्रम् अवचीयते |
| ३) आचार्यः शिष्यं व्याकरणं ब्रूते | आचार्येण शिष्यः व्याकरणम् उच्यते |
| ४) महेशः ग्रामम् अजां नयति | महेशेन ग्रामम् अजा नीयते |

# द्विकर्मकस्थले प्रयोगपरिवर्तनम्

बुद्धिभक्षार्थयोः शब्दकर्मणां च निजेच्छया। प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः।

1. पिता पुत्रं विद्यालयं गमयति — पित्रा पुत्रः विद्यालयं गम्यते
2. गुरुः छात्रं श्लोकार्थम् अवगमयति — गुरुणा छात्रं श्लोकार्थः अवगम्यते/गुरुणा छात्रः श्लोकार्थं अवगम्यते।
3. माता शिशुम् ओदनं भोजयति — मात्रा शिशुम् ओदनः भोज्यते/मात्रा शिशुः ओदनं भोज्यते
4. अध्यापकः बालं गद्यं पाठयति — अध्यापकेन बालं गद्यं पाठ्यते/अध्यापकेन बालः गद्यं पाठ्यते
5. तरुणः वृद्धम् उपवेशयति — तरुणेन वृद्धः उपवेश्यते
6. माता बालिकां चन्द्रं दर्शयति — मात्रा बालिका चन्द्रं दर्श्यते
7. अध्यापिका रमां नृत्यं कारयति — अध्यापिकया रमा नृत्यं कार्यते

रामोऽपि परमोदारस्सुमुखस्सुमहायशाः ।
न चैच्छत्पितुरादेशाद्राज्यं (रामो महाबलः) ॥1.1.36॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  परमोदारः सुमुखः सुमहायशाः महाबलः रामः अपि पितुः आदेशात् राज्यं न ऐच्छत् ।
- अन्वयार्थः

  उदारचेताः शोभनाननः सुकीर्तिः शक्तिसम्पन्नः राघवः अपि जनकस्य आज्ञया राजसिंहासनं न अवाञ्छत् ।

रामोऽपि परमोदारस्सुमुखस्सुमहायशाः ।
न चैच्छत्पितुरादेशाद्राज्यं (रामो महाबलः) ॥1.1.36॥

- पदपरिचयः
  - रामः, परमोदारः, सुमुखः, महाबलः – राम, परमोदार, सुमुख, महाबल – पुं, प्रथमा, एकवचनम्।
  - सुमहायशाः – सुमहायशस् – पुं, प्रथमा, एकवचनम्।
  - अपि, न, च – अव्ययम्।
  - पितुः – पितृ – पुं, षष्ठी, एकवचनम्।
  - आदेशात् – आदेश – पुं, पञ्चमी, एकवचनम्।
  - राज्यम् – नपुं, द्वितीया, एकवचनम्।
  - ऐच्छत् – इषु – इच्छायाम्, कर्तरि, लङ्, प्रपु, एकवचनम्।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः ।
निवर्तयामास ततो भरतं भरताग्रजः ॥1.1.37॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  भरताग्रजः रामः राज्याय पादुके न्यासं दत्वा भरतं पुनःपुनः निवर्तयामास।
- अन्वयार्थः

  भरतस्य ज्येष्ठभ्राता रामः राजसिंहासनाय पादत्राणे प्रदाय सुमित्रानन्दनं भूयः भूयः प्रतिप्रेषयामास।

# पादुके चास्य राज्याय न्यासं दत्त्वा पुनःपुनः ।
# निवर्तयामास ततो भरतं भरताग्रजः ॥1.1.37॥

- पदपरिचयः
  - पादुके – पादुका – स्त्री, द्वितीया, एकवचनम्।
  - च – अव्ययम्।
  - पुनः पुनः – पुनर् – अव्ययम्।
  - राज्याय – राज्य – नपुं, चतुर्थी, एकवचनम्।
  - न्यासं, भरतम् – न्यास, भरत – पुं, द्वितीया, एकवचनम्
  - अस्य – इदम् – (सर्वनाम) पुं, षष्ठी, एकवचनम्।
  - राज्याय – राज्य – नपुं, चतुर्थी, एकवचनम्।
  - ततः – तद्धितान्तम् अव्ययम्।
  - दत्वा – क्त्वान्तम् अव्ययम्।
  - भरताग्रजः – भरताग्रज – पुं, प्रथमा, एकवचनम्।
  - निवर्तयामास – नि+वृतु – वर्तने + णिच्, कर्तरि, लिट्, एकवचनम्।

स काममनवाप्यैव रामपादावुपस्पृशन् ॥1.1.38॥
नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

स कामम् अनवाप्य रामपादौ उपस्पृशन् रामागमनकाङ्क्षया नन्दिग्रामे राज्यम् अकरोत्।

- अन्वयार्थः

भरतः रामप्रतिनिवृत्तिरूपं कामम् अप्राप्य रामचरणौ नमस्कुर्वन् रामस्य पुनरागमनाभिलाषया नन्दि-नाम्नि ग्रामे राज्यस्य प्रशासनं चकार।

# स काममनवाप्यैव रामपादावुपस्पृशन् ॥1.1.38॥
# नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया ।

- पदपरिचयः
  - सः – तद् – (सर्वनाम) पुं, प्रथमा, एकवचनम्।
  - कामम् – काम – पुं, द्वितीया, एकवचनम्।
  - अनवाप्य – ल्यबन्तम् अव्ययम्।
  - एव – अव्ययम्।
  - रामपादौ - रामपाद – पुं, द्वितीया, द्विवचनम्।
  - उपस्पृशन् – उपस्पृशत् – पुं, प्रथमा, एकवचनम्।
  - नन्दिग्रामे – नन्दिग्राम – पुं, सप्तमी, एकवचनम्।
  - रामागमनकाङ्क्षया – रामागमनकाङ्क्षा – स्त्री, तृतीया, एकवचनम्।
  - राज्यम् – राज्य – नपुं, द्वितीया, एकवचनम्।
  - अकरोत् – डुकृञ् – करणे, कर्तरि, लङ्, प्रपु, एकवचनम्।

गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रियः ॥1.1.39॥
रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ।
तत्रागमनमेकाग्रो दण्डकान्प्रविवेश ह ॥1.1.40॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

भरते गते श्रीमान् सत्यसन्धः जितेन्द्रियः एकाग्रः रामः नागरस्य जनस्य च तत्र आगमनं पुनः आलक्ष्य दण्डकान् प्रविवेश ह।

- अन्वयार्थः

कैकेयी पुत्रे गते लक्ष्मीवान् सत्यप्रतिज्ञः इन्द्रियविजयी नियतचित्तवृत्तिः दशरथस्य ज्येष्ठपुत्रः नगरनिवासिनः लोकस्य तस्मिन् प्राप्ति भूयः आशङ्क्य दण्डकवनानि प्राविशत्।

गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रियः ॥1.1.39॥

रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ।

तत्रागमनमेकाग्रो दण्डकान्प्रविवेश ह ॥1.1.40॥

- पदपरिचयः
  - गते, भरते – गत, भरत – पुं, सप्तमी, एकवचनम्।
  - तु, च, ह – अव्ययम्
  - पुनः – पुनर् – अव्ययम्।
  - सत्यसन्ध, जितेन्द्रियः, रामः, एकाग्रः - सत्यसन्ध, जितेन्द्रिय, राम, एकाग्र – पुं, प्रथमा, एकवचनम्।
  - श्रीमान् – श्रीमत् – पुं, प्रथमा, एकवचनम्।
  - नागरस्य, जनस्य – पुं, षष्ठी, एकवचनम्।
  - तत्र – तद्धितान्तम् अव्ययम्।
  - आगमनम् – आगमन – नपुं, द्वितीया, एकवचनम्।
  - दण्डकान् – दण्डक – पुं, द्वितीया, बहुवचनम्।
  - आलक्ष्य – ल्यबन्तम् अव्ययम्।
  - प्रविवेश – प्र + विश – प्रवेशने, कर्तरि, लिट्, प्रपु, एकवचनम्।

प्रविश्य तु महारण्यं रामो राजीवलोचनः ।
विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ॥1.1.41॥
सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

राजीवलोचनः रामः महारण्यं प्रविश्य विराधं राक्षसं हत्वा शरभङ्गं सुतीक्ष्णम् अगस्त्यं तथा च अगस्त्यभ्रातरं ददर्श ह।

- अन्वयार्थः

कमलनयनः राघवः बृहत् काननं गत्वा तथा च असुरं विराधाख्यं मारयित्वा शरभङ्गाख्यम् ऋषि सुतीक्ष्णाभिधम् अगस्त्यनामानम् एवं च अगस्त्यसहोदरं दृष्टवान्।